तथा लाक्षणिको मुख्याश्रितमर्थं ब्रवीति यः ।
व्यङ्ग्ययुक्तो व्यञ्जकः स्यादेषां व्यापृतिरुच्यते ॥ ११ ॥

अभिधालक्षणाव्यञ्जनाः क्रमतः समीरिताः ।
रूढयौगिकमिश्राख्यास्ते शब्दास्त्रिविधाः स्मृताः ॥ १२ ॥

प्रकृतिप्रत्ययद्वारा नन्वर्था रूढिमाश्रिताः ।
मण्डपाखण्डलाद्यास्तु न व्युत्पत्तिमुपाश्रिताः ॥ १३ ॥

गुणेन क्रियया वापि संबन्धेन च यो भवेत् ।
परस्परार्थानुगमः स योग इति कीर्त्यते ॥ १४ ॥

गुणतो नीलकण्ठाद्याः संख्यातः षण्मुखादयः ।
क्रियातः स्रष्टृप्रमुखाः संबन्धाद्भुजगादयः ॥ १५ ॥

मत्वर्था अपि संबन्धे कपालिप्रमुखास्ततः ।
जन्यात्कृत्सूतिधात्राद्या विश्वकृत्प्रमुखास्ततः ॥ १६ ॥

जनकाद्योनिमुख्याः स्युरात्मयोनिमुखास्ततः ।
अपत्यप्रत्ययाद्येभ्य आदितेयादिकाञ्जगुः ॥ १७ ॥

धार्यधारकसंबन्धे वृषध्वजपिनाकिनः ।
भोज्यभोजकसंबन्धेऽमृतभुक्तद्व्रतादयः ॥ १८ ॥

पत्युः कान्ताः प्रियातुल्याः शिवकान्तादिकास्ततः ।
पत्न्याः प्राणेश्वरमुखा गौरीप्राणेश्वरस्ततः ॥ १९ ॥

सख्युः सखिप्रभृतयस्ततः शिवसखादयः ।
वृषवाहनमुख्याः स्युर्वाह्यवाहकभावतः ॥ २० ॥

ज्ञातिस्वसृदुहित्राद्यैर्हिमवद्दुहितृप्रथाः ।
आश्रयाश्रयिभावेन दिवौकःप्रमुखा अपि ॥ २१ ॥

स्युर्वध्यवधकत्वे तु पुरजिन्मुरजिन्मुखाः ।
पतिधार्यत्ववाह्यत्वसंबन्धो हि विवक्षया ॥ २२ ॥

रुद्रे वृषात्तदेकस्मात् पतिलाञ्छनवाहनाः ।
स्याद्व्यक्तिवाचको जातिशब्दोऽपि व्यक्तचिह्नतः ॥ २३ ॥



दक्षिणा दिक् पथागस्त्यनिवासत्वेन कीर्त्यते ।
त्रिपञ्चादि पदस्थाने शब्दौ हि विषमायुजौ ॥ २४ ॥

तेन त्रिनेत्रो विषमनेत्रोऽयुङ्नेत्र इत्यपि ।
गुणो विरोधिनं वक्तीतरान्तो नञ्नपूर्वकः ॥ २५ ॥

सितेतरोऽसितस्तस्मात् कृष्णोऽतो व्यपदिश्यते ।
जलादिषु प्राक्पदेषु पर्यायपरिवर्तनम् ॥ २६ ॥

जलदस्तोयदस्तस्माज्जलधिर्नीरधिस्तथा ।
जनिरुध्प्रभृतिषु तूत्तरेषु परिवर्तनम् ॥ २७ ॥

सरोरुहं सरोजं च ततः स्यादेवमादिकम् ।
सुरपत्न्यादिषु प्राय उभयोः परिवर्तनम् ॥ २८ ॥

ततः सुरपतिर्देवराजः स्यात्त्रिदशेश्वरः ।
इत्याद्या यौगिकाः शब्दाः परिवृत्य सहाश्रयैः ॥ २९ ॥

गीर्वाणप्रमुखाः शब्दास्ते मिश्राः परिकीर्तिताः ।
एतेषां कविरूढ्यैव ज्ञेयोदाहरणावलिः ॥ ३० ॥

तथा हि समयं प्राहुः कवीनामिह तद्विदः ।
जात्यादिनियमापेक्षमर्थं बध्नन्ति कुत्रचित् ॥ ३१ ॥

असन्तमपि बध्नन्ति न सन्तमपि कुत्रचित् ।
दिङ्मात्रमेतदत्रोक्तं नाम्नामन्या अपि स्वयम्
कालदेशोपदेशेन तर्कयेदनया दिशा ॥ ३२ ॥

यद्यशःपद्मावातुं त्रिलोक्यां गोः पदं व्यधात् ।
अपि विष्णुपदं तेन पदं राजा स्थिरीकृतम् ॥ ३३ ॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे
षोडशसाहस्र्यां संगीतमीमांसायां पाठ्य-
रत्नकोशे पदोल्लासे पदपरीक्षणं
प्रथमं समाप्तम् ॥

# २ वाक्यपरीक्षणम्

अतीतो वाक्यमार्गं यो वेदमार्गेण मृग्यते ।
वाक्यवाच्यादिरूपेण तमवाक्यं भजे शिवम् ॥ १ ॥

यतः सर्वः पदार्थोऽयं वाक्यार्थे पर्यवस्यति ।
ततस्तेषां समूहोऽत्र वाक्यं वाक्यविदोच्यते ॥ २ ॥

पदव्यवहृतिर्वाक्ये पदबन्धागता मता ।
द्विविधं तत् पदं ज्ञेयं निबद्धं चूर्णमेव च ॥ ३ ॥

तत्र चूर्णपदस्यादौ लक्षणं संगृणाम्यहम् ।
अनिबद्धपदं छन्दोहीनं चानियताक्षरम् ॥ ४ ॥

अर्थापेक्षाक्षरोपेतं ज्ञेयं चूर्णपदं बुधैः ।
यतिच्छन्दः समायुक्तं तथात्र नियताक्षरम् ॥ ५ ॥

पादैश्चतुर्भिर्नियतं निबद्धं पदमीरितम् ।
एवं नानार्थसंयुक्तैः पदैर्वर्णविभूषितैः ।
पदबन्धाः प्रकर्तव्या यथालक्षणलक्षिताः ॥ ६ ॥

आद्येष्वष्टसु देवता निगदिता वर्गेषु सोमः कुजो
ज्ञेयौ शुक्रशनी रविस्तम इति स्यात्तत्फलं च क्रमात् ।
आयुर्वाच्यपदं धनं सुभगता कीर्तिश्च मान्द्यं मृतिः
शून्यत्वं मुखतस्तदक्षरवशाद्वर्णस्य गीतादिषु ॥ ७ ॥

एवं मित्रावरुणसदनादुच्चरत्प्राणशक्त्या-
संगप्रोद्यत्पवनहतितत्स्थानजीर्णोत्करेण ।
आरब्धे तत्पदघटनया कारणं गीतकादे-
र्लोके सर्वव्यवहृतिपदं वाक्यमन्यन्न रूपि ॥ ८ ॥

प्राकृतं चापि विज्ञेयं संस्कृतस्य विपर्ययात् ।
तद्भवं तत्समं देशीत्येवं त्रैविध्यमस्य तु ॥ ९ ॥

स्वरवर्णान्यतां वापि न्यूनतां वापि ये पदे ।
न्यस्ता गच्छन्ति संयुक्तास्तद्भवास्ते प्रकीर्तिताः ॥ १० ॥



तरङ्गलोलसलिलकमलामललक्षणाः ।
तुल्याकृतिधरा ये तु संस्कृते ते च तत्समाः ॥ ११ ॥

महाराष्ट्रादिदेशानां भाषामाश्रित्य वर्तते ।
यत्तद्देशीति विज्ञेयं सुज्ञेयमिह तद्विदाम् ॥ १२ ॥

भाषा चित्रप्रबन्धेषु गाथादावुपयुज्यते ।
यद्यप्येतत्तथाप्यत्र नास्माभिरिह तन्यते ॥ १३ ॥

यद्वाक्यं राजवृन्देन शिरसा विष्णुमाल्यवत् ।
धार्यते कालसेनेन तेन वाक्यं निरूपितम् ॥ १४ ॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे
षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे
पदोल्लासे वाक्यपरीक्षणं द्वितीयं समाप्तम् ॥

## ३. संज्ञापरीक्षणम् ।

व्याकृते जगतां येन नामरूपे नमाम्यहम् ।
तमरूपमनामानं शङ्करं लोकशङ्करम् ॥ १ ॥

गीतं वाद्यं तथा नृत्यं त्रयं संगीतमुच्यते ।
तद्द्विधा भिद्यते मार्गदेशीभेदेन तत्त्वतः ॥ २ ॥

मार्गितत्वाद्विरिञ्चेन प्रयुक्तत्वात्तथर्षिणा ।
महोदयनिमित्तत्वाद्विख्यातो मार्ग उच्यते ॥ ३ ॥

तदेव रुचिवैचित्र्याच्चित्तरञ्जनकृज्जनैः ।
प्रयुक्तं स्वस्वदेशे यत्ततो देशीति कीर्त्यते ॥ ४ ॥

छादनादपयत्यादेरुक्ताद्यं छन्द ईरितम् ।
उपमाद्या अलंकाराः पाठ्यालंकृतिहेतवः ॥ ५ ॥

स्वरयन्ति मनांसीह श्रोतृणां स्वार्थतो यतः ।
षड्जादिकाः स्वरास्तेन ते च साद्यक्षराभिधाः ॥ ६ ॥

यथागोत्रकुलाचारोत्पन्नं पुंनाम सम्मतम् ।
तथा ज्ञेया रसानां च स्वराणामभिधा इमाः ॥ ७ ॥

विभूषयन्ति च रसं केयूरादिवदङ्गिनम् ।
श्रवणाच्छ्रुतयस्ताश्च तीव्राद्याः स्वरहेतवः ॥ ८ ॥

श्रुत्युत्कर्षापकर्षैर्हि विकृतिप्रकृती मते ।
व्यवस्थितश्रुतियुता यत्र संवासिनः स्वराः ॥ ९ ॥

मूर्छनाद्याश्रयो नाम स ग्राम इति संज्ञितः ।
आरोहणावरोहेण क्रमेण स्वरसप्तकम् ॥ १० ॥

रागादेर्मूर्छनादत्र मूर्छना परिकीर्तिता ।
ता एव शुद्धतानाः स्युः षाडवौडुवितीकृताः ॥ ११ ॥

पूर्णापूर्णविभेदेन द्विधा या मूर्छनाः स्मृताः ।
ता एव कूटतानाः स्युर्व्युत्क्रमोच्चारितस्वराः ॥ १२ ॥



प्रस्तारे पूर्वरूपाणि तेषां मूलक्रमाः स्मृताः ।
साधारणीकृताशेषभूभुजा तामराजिना ॥ १३ ॥

साधारण्यात् स्वरजात्योः साधारणमिहोदितम् ।
स्थाय्यादिभिश्चतुर्धासौ वर्णो गानक्रिया मता ॥ १४ ॥

एक एव स्वरो यस्तु स्थित्वा स्थित्वा पुनः पुनः ।
प्रयुज्यते स तु स्थायी परावन्वर्थनामकौ ॥ १५ ॥

आरोही चावरोही च संचारी तद्द्वियोगजः ।
प्रतिपक्षक्षमापालभालालंकाररूपिणा ॥ १६ ॥

विशिष्टो वर्णसंघातोऽत्रालंकार उरीकृतः ।
अतारविश्रमस्वांशापन्यासन्यासभूषणान् ॥ १७ ॥

क्रियते कालसेनेन शुद्धजातिपरिग्रहः ।
स्वनामस्वरविश्रामविशिष्टत्वेन तद्बहिः ॥ १८ ॥

शुद्धलक्ष्म विना भूता विकृताः किं न सम्मताः ।
गीतमुद्ग्राह्यते येन स स्वरो ग्रह उच्यते ॥ १९ ॥

प्रयोगे बहुलोंऽशः स्यान्न्यासो गीतसमाप्तिकृत् ।
विदारी गीतखण्डः स्यादपन्यासस्तदन्तकृत् ॥ २० ॥

विन्यासः स विदार्यंशपदप्रान्ते स्थितस्तु यः ।
अंशो विवादी संन्यासो वनदेवगणोदितः ॥ २१ ॥

यस्मात्तारस्य मन्द्रस्य च गतिरनुवादी च संवादिसंज्ञो
यः स्याद्वादी विवादी स्वर इह जनयेद्यस्तु गेयेऽत्र शंकिम् ।
न्यासापन्याससंन्यासकविधिकलविन्यासवर्गे ग्रहत्वं
प्राप्तोंऽशो योग्यतातो भवति च बहुलो यो विदार्यां स वादी ॥२२॥

राजा स स्याद्विवादी रिपुरिव विवदन् मुख्यमन्त्रीव तस्मिन्
संवादी संवदन् योऽनुवदति खलु तं सोऽनुवादी स्वरोऽस्मिन् ।
अंशत्वं व्यापकत्वे सति पुनरुदितं गेयकर्मण्यमुष्य
क्षोणीसुश्रोणिभर्त्रा तदनु च बहुलत्वं सुगानप्रयोगे ॥ २३ ॥

षाडवं षट्स्वरं प्रोक्तं तत्पञ्चस्वरमौडुवम् ।
पुनरावृत्तिरभ्यास ईषत्स्पर्शोऽत्र लङ्घनम् ॥ २४ ॥

अलङ्घनं तथाभ्यासो बहुत्वे लक्ष्म चक्षते ।
वादिसंवाद्यनुपरपर्यायं तु तदिष्यते ।
अनंशविषयोऽल्पत्वं बहुत्वस्य विपर्ययात् ॥ २५ ॥

हित्वा न्यासादिस्थितिं यः स्वराणां
मध्ये मध्येऽल्पत्वभाजां कदाचित् ।
सङ्गोऽशाद्यैः कोऽपि वैचित्र्यहेतुः
प्रोक्तो मार्गः सोऽन्तराद्यः स्वरज्ञैः ॥ २६ ॥

अल्पप्रयोगः सर्वत्र काकली चान्तरस्वरः ॥ २७ ॥

मन्द्रः प्रसन्नो मृदुसंज्ञकश्च
लिपौ भवेद्बिन्दुशिराः स एव ।
तारस्तु दीप्तः परमूर्ध्वरेखा-
शिरा लिपौ त्रिर्वचनात् प्लुतः सः ॥ २८ ॥

स्यान्मूर्छनायाः प्रथमः स्वरोऽत्र मन्द्रः स एव द्विगुणास्तु तारः ।
तत्पूर्वपूर्वा भवतीह मन्द्रः परः परोऽन्यः स विभूषणेषु ॥ २९ ॥

स्वरसाधारणमुदितं समपेष्वंशेषु नियतमनुरूपम् ।
पञ्चमिकामध्यमिकाजात्योस्तु स षड्जमध्यमयोः ॥ ३० ॥

अल्पद्विश्रुतिकास्तु जातिषु तथा रागेषु भाषास्विदं
तावंशौ यदि षड्जमध्यमिकया न स्यात् सह स्थास्नुकम् ।
एवं कौतुकिनात्र निश्चितमिदं तत्रापि तस्याश्रया
प्रायः स्युर्विकृता इहैव भणितौ श्रीब्रह्मशैलेशितुः ॥ ३१ ॥

सलयतालपदाः स्वरराजिता
विविधवर्णविभूषणभूषिता ।
गमकपेशलगानगुणाश्रिता
मुनिवरैरिह गीतिरुदाहृता ॥ ३२ ॥

विचित्रवर्णालंकारो विशेषो यो ध्वनेरिह ।
ग्रहादिस्वरसन्दर्भो रञ्जको राग उच्यते ॥ ३३ ॥



तत्र ग्रामसमुद्भूतपञ्चगीतिसमाश्रयात् ।
शुद्धादिभेजसंभिन्नो ग्रामराग इतीरितः ॥ ३४ ॥

तदुद्भवश्चोपरागो रागो रञ्जनकृत्ततः ।
भाष्यते येन तत्स्थाया स भाषाराग उच्यते ॥ ३५ ॥

तमाश्रित्य प्रवृत्ता या विभाषा भाषितात्र सा ।
भाषाविभाषयोरन्तरुत्पन्नान्तरभाषिका ॥ ३६ ॥

भाषाद्या गीतयस्तिस्रो याष्टिकेनोररीकृताः ।
तत्र भाषा समाख्याता मुख्यानन्योपजीविनी ॥ ३७ ॥

स्वरनाम्ना स्वराख्या तु देशाख्या देशनामतः ।
आभ्यस्तिसृभ्यो जायन्ते यास्ताः स्युरुपरागजाः ॥ ३८ ॥

स्वजात्युद्योतकत्वे येऽनुवर्तन्ते तु तासिह ।
अन्यजातिविरूपा ये ते शुद्धा रागसत्तमाः ॥ ३९ ॥

श्रुतिभिश्च स्वरैश्चैव शुद्धत्वेन च जातिभिः ।
चतुर्भिर्भिद्यते यस्तु स भिन्न इति कीर्त्यते ॥ ४० ॥

रागाङ्गत्वं ग्रामरागस्थायामात्रोपजीवनात् ।
भाषाणामाश्रिता स्थाया यैस्तदङ्गानि तानि च ॥ ४१ ॥

क्रियाङ्गानि च कथ्यन्ते दीपकादिक्रियायुजेः ।
श्रोतृचित्तोत्साहकरगुणायोगाच्च कोविदैः ॥ ४२ ॥

अङ्गाश्रयसमुत्पन्नान्युपाङ्गानि च मेनिरे ।
देशीरागत्वमप्यस्य रागाङ्गादेरुदीरितम् ॥ ४३ ॥

पदं वागभिधेया स्यात् सा मातुरभिधीयते ।
गेयं धातुस्तयोः कर्तोच्यते वाग्गेयकारकः ॥ ४४ ॥

गान्धर्वो मार्गदेशीवित् स्वरादेर्मार्गकोविदः ।
गान्धर्वं तत्र विज्ञेयं स्वरतालपदात्मकम् ॥ ४५ ॥

पुरा प्रणष्टां देवेभ्यो वाचं गोरूपधारिणीम् ।
अधारयदिति प्रोक्तं गान्धर्वमिह सूरिभिः ॥ ४६ ॥

अत्यर्थसिद्धं देवानामत एव प्रकीर्तितम् ।
वंशवीणाशरीरेभ्यः प्रभवस्तस्य संमतः ॥ ४७ ॥

तथोक्तम्—

पदस्थः स्वरसंघातस्तालेन सुमितस्तथा ।
प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते ॥ ४८ ॥

पुनर्गीतं पुनर्वाद्यमेवं योज्यं पुनः पुनः ।
अलातचक्रप्रतिमं स च भावविभावकम् ॥ ४९ ॥

श्रोतुश्चित्तस्य सुखदो गमकः स्वरकम्पनम् ।
स च वाग इति स्थायो रागस्यावयवः स्मृतः ॥ ५० ॥

यत्ततोऽतिशयारोपो रागस्य भजनं मतम् ।
गमकस्थायवर्णाद्या नानालंकृत्यलंकृता ॥ ५१॥

रागालापनपालप्रिभूरिभङ्गिमनोहरा ।
प्रयोगाढ्या तथालापसंज्ञा साक्षरवर्जिता ॥ ५२ ॥

अनिबद्धं च तामाहुर्गीतं गीतविशारदाः ।
गातॄणां वादकानां च समूहो वृन्दमुच्यते ॥ ५३ ॥

रागोऽभिधीयते गीतं दशलक्षणलक्षितः ।
लक्षणानि च तत्रांशन्यासौ षाडवमौडुवम् ॥ ५४ ॥

अल्पत्वं च बहुत्वं च ग्रहोऽपन्याससंयुतः ।
मन्द्रता तारता चापीत्येवं ज्ञेयानि सूरिभिः ॥ ५५ ॥

प्रबन्धो रूपकं वस्तुनिबद्धं गीतमुच्यते ।
निबद्धावयवो धातुर्धराधीशस्य संमतः ॥ ५६ ॥

कलाकालप्रमाणेन ताल इत्यभिधीयते ।
अर्धं मात्रा द्वे च तिस्रो द्रुतो लघुगुरुप्लुताः ॥ ५७ ॥

क्रमात्तेषां चतुर्णां स्युः संज्ञा वलगपा इति ।
द्रुते स्याद्देवता शम्भुर्हिमवद्दुहिता लघौ ।
शिवौ गुरुणि संप्रोक्तौ प्लुते ब्रह्मादयस्त्रयः ॥ ५८ ॥



द्रुते व्यञ्जनं व्योम बिन्द्वर्धमात्रं लघौ व्यापकं ह्रस्वमृज्वेकमात्रम् ।
गुरौ वक्रदीर्घौ कला च द्विमात्रं प्लुते सामजत्र्यङ्गदीप्तत्रिमात्राः॥५९॥

द्रुतलघ्वादिरूपाढ्यक्रियामानोपलक्षितः ।
गीतादिकं परिच्छिन्दन् कालस्ताल इतीरितः ॥ ६० ॥

पञ्चलघ्वक्षरोच्चारमिता मात्रा कला च सा ।
मार्गभिन्नलयोपेता छोटिका चात्र मार्गिता ॥ ६१ ॥

ततः कलाकालकृतो लयः सलयमीरितः ।
तत्प्रवृत्तेर्नियमनं यतिर्यतिभिरीरिता ॥ ६२ ॥

ततं वीणादि सुषिरं वंशादि मुरजादि च ।
अवनद्धं घनं कांस्यं तालादि परिकीर्तितम् ॥ ६३ ॥

वाद्यवर्णसमूहस्तु पाटः पटुधियां मतः ।
वाद्यमत्रोच्यते तत्तत्पाणियोगेन वादनम् ॥ ६४ ॥

रूपादिकं तत्करणं वाद्यप्रकरणे मतम् ।
स्वरास्ते धातवः प्रोक्ता ये प्रहारविशेषजाः ॥ ६५ ॥

गुणप्रधानभावेन यासौ व्यवहृतिर्मता ।
वृत्तिर्निगद्यते साद्या वाद्यविद्याविशारदैः ॥ ६६ ॥

गीतानुगं त्रिःप्रकारं मतं वाद्यं ततादिकम् ।
विन्यासः पाटवर्णानां वाद्यानि मुरजादिषु ॥ ६७ ॥

स्कन्धादिकम्पः सञ्चः स्यात् कोणः कुतप इत्यपि ।
वीणादिवादनो दण्डः प्रवीणैरुपवर्ण्यते ॥ ६८ ॥

उद्ग्राहादिविधा वाद्यप्रबन्धाः पाटवर्णजाः ।
विभावयन् विचित्रार्थानङ्गाद्यैर्यः प्रयोगतः ॥ ६९ ॥

रसाविर्भावको द्रष्टुर्नटेऽर्थोऽभिनयस्तु सः ।
स चतुर्धा बुधैर्ज्ञेयस्तत्राङ्गैर्दर्शितो मतः ॥ ७० ॥

आङ्गिको वाचिकश्चैव नाटकादिषु तत्त्वतः ।
वाचा विरच्यते यस्तु विज्ञेयः सात्त्विकः पुनः ॥ ७१ ॥

विभावितस्तु यो भावैः सात्त्विकैर्भावकेन हि ।
आहार्यः स तु विज्ञेयः किरीटादिविभूषणैः ॥ ७२ ॥

शोभामाहृत्य जनितो नटेऽनुकृतितः सतः ।
तत्राङ्गाभिनयस्यैतत्त्रयं मुख्यं प्रकीर्तितम् ॥ ७३ ॥

शाखा चैवाङ्कुरश्चैव नृत्तं चेति समासतः ।
व्यापाराः करयोर्यत्र विचित्रार्थविबोधकाः ॥ ७४ ॥

ते स्मृता वर्तनास्तज्ज्ञैस्ताः शाखाः परिकीर्तिताः ।
भूतवाक्यार्थविषयमुपजीव्य प्रवर्तितः ॥ ७५ ॥

चित्तवृत्त्यर्पकोऽङ्गानां व्यापारोऽङ्कुर ईरितः ।
स एव सूचासंज्ञः स्याद्भाविवाक्योपजीवकः ॥ ७६ ॥

अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ।
एतच्चतुर्धाभिनयेनोपेतं नाट्यमुच्यते ॥ ७७ ॥

नृत्तं तत्राङ्गिकैरेवाभिनयैर्व्यञ्जकं तु यत् ।
भावानां भावशब्देन तदेवात्रोपदर्शितम् ॥ ७८ ॥

आङ्गिकोक्तेन विधिनाभिनयैर्यद्विना कृतम् ।
गात्रविक्षेपणं तद्धि नृत्तमत्रोपवर्णितम् ॥ ७९ ॥

नाट्यादित्रितयं ह्येतद्द्विविधं परिकीर्तितम् ।
लास्यताण्डवभेदेन तत्र लास्यं तदुच्यते ॥ ८० ॥

ललनाललिताङ्गैर्यत्साधितं कामवर्धनम् ।
आसारितादिभिर्गीतैरुद्धतप्रायवर्धनैः ॥ ८१ ॥

करणैरङ्गहारैश्च निवृत्तं विषमैरिह ।
ताण्डवं तण्डुना प्रोक्तं नृत्तं नृत्तविदो विदुः ॥ ८२ ॥

केचिद्भेदत्रयं चान्यन्नृत्यस्याहुर्मनीषिणः ।
विषमं विकटं लघ्वित्यत्र तद्विषमं मतम् ॥ ८३ ॥

यदभ्यासवशाद्रज्जुभ्रमणादि प्रदृश्यते ।
विकटं रूपवेषादौ वैरूप्येण प्रवर्तितम् ॥ ८४ ॥



लघुः स्यात् करणैरल्पैरञ्चिताद्यैर्विशेषितम् ।
नन्वत्र नाट्यशब्दोऽयं नर्तने वर्तते कथम् ॥ ८५ ॥

यतोऽत्र मुख्यया वृत्त्या रसाविर्भावकात्ततः ।
अभिधत्ते रसं नैतद्वृत्त्या लक्षणाया त्वयम् ॥ ८६ ॥

रसाभिव्यञ्जकत्वेनाभिनयादिचिकीर्षतः ।
नर्तने नाट्यशब्दोऽयं वर्तते नात्र दूषणम् ॥ ८७ ॥

अभिनेयपदार्थस्योल्लेखने प्रक्रिया पुनः ।
कुत्रचिल्लोकधर्मीति नाट्यधर्म्यपि कुत्रचित् ॥ ८८ ॥

तत्रादौ लोकधर्म्यास्तु लक्षणं प्रोच्यते मया ।
स्वभावाच्चेतसो वृत्ते रूपगन्त्रीविवर्जिता ॥ ८९ ॥

विकारेण विशुद्धा च लोकवार्ताक्रियायुता ।
स्वभावाभिनयोपेता ह्यङ्गलीलां विना कृता ॥ ९० ॥

नानास्त्रीपुंश्रिता लोकधर्मी नाट्यक्रिया स्मृता ।
न श्रूयते यत्र वाक्यं योग्यं श्रवणकर्मणः ॥ ९१ ॥

अनुक्तमपि वा यत्र श्रूयते कुतुकादिव ।
लोके यदप्रसिद्धं तु नाट्ये केचित् प्रयुज्यते ॥ ९२ ॥

मूर्तिमत् साभिलाषं च नाट्यलक्षणलक्षितम् ।
अतिवाक्यक्रियोपेतं स्वरालंकारसंयुतम् ॥ ९३ ॥

लीलाङ्गहाराभिनयं रागाभिव्यक्तिकारणम् ।
अश्वत्थपुरुषोपेतमतिसत्त्वविभावकम् ॥ ९४ ॥

शैलयानविमानानि चर्मवर्मायुधध्वजाः ।
मूर्तिमन्तः प्रयुज्यन्ते नृत्यते गम्यतेऽपि वा ॥ ९५ ॥

ललितैरङ्गविन्यासैस्तथाक्षिप्तपदक्रमैः ।
सुखदुःखक्रियारूपः स्वभावे यस्तु लोकगः ॥ ९६ ॥

साङ्गाभिनयसंयुक्तो दिव्यमानुषरक्तिदः ।
ब्रह्मोक्तश्चेतिहासोऽयं नाट्यधर्मीति कीर्तिता ॥ ९७ ॥

यस्मात् सर्वोऽपि रागोऽयं न ह्यङ्गाभिनयादृते ।
सर्वोऽप्यभिनयो ह्येष पदार्थज्ञानसंभवः ॥ ९८ ॥

अङ्गालंकारचेष्टादि नाट्यधर्म्यां प्रतिष्ठितम् ।
अङ्गानि शिरआदीनि प्रत्यङ्गानि तथैव च ॥ ९९ ॥

ग्रीवादीनि तथोपाङ्गं दृष्टिपार्श्वादिकं मतम् ।
व्यञ्जकाः स्युर्मनोवृत्तेर्मुखरागा रसाश्रयाः ॥ १०० ॥

करप्रचाराः करयोर्व्यापाराः करणानि च ।
क्रियाविशेषो हस्तस्य स्वतन्त्राभिनयाय यः ॥ १०१ ॥

निष्पत्तिविषये तानि धूननाद्यास्तु तत्क्रियाः ।
विश्रान्तिस्थानकं क्षेत्रं सविलासं करस्य तु ॥ १०२ ॥

सविलासा रसोपेता करपादादिका क्रिया ।
करणं नृत्यकरणं तदेव परिकीर्तितम् ॥ १०३ ॥

तदेव प्लुतिपूर्वं स्यादुद्धतप्रायनर्तने ।
अङ्गहारोऽङ्गविक्षेपः करणैरुपबृंहितः ॥ १०४ ।

चालनं करपादादे रेचकः सविलासकम् ।
विचित्रं चरणादीनां कर्म चारी समं कृतम् ॥ १०५ ॥

चारीणां चरणं चित्रं मण्डलं संप्रचक्षते ।
स्थानं स्यादक्रियः कश्चित् संनिवेशः शरीरगः ॥ १०६ ॥

पुमर्थसाधनी चेष्टा वाङ्मनःकायसंभवा ।
वृत्तिः स्यात् स्वान्यशास्त्राणां कर्तुं च्यावनपातने ॥ १०७ ॥

उचितावर्तनाङ्गस्य संग्रामे न्याय उच्यते ।
मनोहरा स्थितौ रेखा त्वङ्गानां मेलके सति ॥ १०८ ॥

योग्यः श्रमविधिः पात्रं नर्तनाधार इष्यते ।
तदेव गौण्डलीं प्राहुः स्वयं गायननर्तनात् ॥ १०९ ॥

स्यादाचार्य उपाध्यायः संप्रदायस्तु तद्विदाम् ।
वृन्दमाहुः पद्धतिश्च नृत्यस्य परिपाटिका ॥ ११० ॥



वर्णैरुपलिप्ताङ्गो लयतालविचक्षणः ।
सभाजनमनोहारी यो नृत्यति स पेरणी ॥ ११२ ॥

नटोऽभिनयवेदी स्यान्नर्तको मार्गनृत्यवित् ।
रस्यते यः सहृदयैः स रसो रसिकप्रियः ।
शेषं स्वावसरे लक्ष्माभिधास्ये लक्ष्मविन्मुदे ॥ ११३ ॥

भूभृत्त्वं भूभृतां येन कुटुम्बीकरणात् कृतम् ।
संज्ञायै केवलं तेन राज्ञा संज्ञा निरूपिता ॥ ११४ ॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे
पाठ्यरत्नकोशे पदोल्लासे संज्ञापरीक्षणं
तृतीयं समाप्तम् ।

# ४. परिभाषापरीक्षणम्

यः पुमान् परमात्मेति कर्तेति परिभाष्यते ।
यस्तीर्थिकैस्तमीशानं भाषातीतं नमाम्यहम् ॥ १ ॥

अंशान्मध्यमसप्तकं स्थितवतस्तारावधावा व्रजे-
त्तारस्थांश्चतुरः स्वरानिह ततोऽर्वाक्कामचारः स्मृतः ।
आरोहेदपि तारषड्जमवधिं तं नन्दयन्त्यां विधा-
वारोप्यो गणनाविधाविह परं लुप्तस्वरोऽप्याहतैः ॥ २ ॥

अंशान्मध्यमसप्तकं स्थितवतो ह्यामन्द्रकस्थांशकं
मन्द्रन्यासकमाप्य वा तदधरत्रिश्रुत्यवस्थावधि ।
कार्यं जात्ववरोहणं निगदिता सीमा परेयं सदा
मन्द्रस्थानगतेरतोऽवगमनेऽर्वाक्कामचारः स्मृतः ॥ ३ ॥

पूर्णत्वे सति षाडवौडुवकृतोरल्पत्वमत्यल्पता
वाक्यादेव विधीयते क्रमतया प्राप्तापि विद्यावता ।
पञ्चम्यां तु विपर्ययेण भवतो जातौ यतस्ते द्वयोः
प्राप्तौ तत्परिसंख्ययैकवचनं प्रायो विधेयास्पदम् ॥ ४ ॥

ये प्रयोगमवन्तीह मिलित्वा षट्स्वरास्तु ते ।
षाडवाः षट्स्वरं गीतं षाडवं तद्भवं ततः ॥ ५ ॥

यस्मिन् वात्युडवस्तदुक्तमुडुवं भूतेषु तत्पञ्चमं
तत्संख्यौडुविकावशेन गदिताः पञ्चस्वरास्त्वौडुवाः ।
संजातास्त इमे तदौडुवितमत्रोक्तं तु गीतं बुधैः
संबन्धात्तत एव विश्रुतिमगात्पञ्चस्वरं त्वौडुवम् ॥ ६ ॥

ताल एककले मार्गश्चित्रो गीतिस्तु मागधी ।
द्विकले वार्तिको मार्गो गीतिः संभाविता मता ॥ ७ ॥

चतुष्कले तु पृथुला गीतिर्मार्गस्तु दक्षिणः ।
या जातिषु कला प्रोक्ता सा दक्षिणपथाश्रिता ॥ ८ ॥

चित्रवार्तिकयोर्ज्ञेया द्विगुणा द्विगुणा तु सा ।
अंशस्वररसस्तज्ज्ञैर्ज्ञातव्यः सर्वजातिषु ॥ ९ ॥



अंशश्च जन्यरागाणां ज्ञेयो जनकजातिषु ।
स्यातामालापकाभोगौ रूपकेण क्वचित् क्वचित् ॥ १० ॥

यत्र वस्तुकृता वस्तुनोक्तमाभोगलक्षणम् ।
पदैस्तत्र प्रयोक्तव्य आभोगो गीतकोविदैः ॥ ११ ॥

आभोगध्रुवयोरन्तरतुरो धातुरस्ति यः ।
छायालगान्तरे सोऽत्र रूपकेषूपवर्णितः ॥ १२ ॥

अव्ययादीनि यान्यत्र रूपकाणि न्यरूपयन् ।
केचिन्न तेषु कर्तव्य आभोगः कर्हिचिद्बुधैः ॥ १३ ॥

अत्र यन्मानमाख्यातं तालज्ञैस्तालकर्मणि ।
विश्रान्तियुक्तया काले क्रियया तदिहेष्यते ॥ १४ ॥

धात्वादिवापनं मत्तकोकिलायां तदीरितम् ।
तदेकतन्त्रीमुख्यासु वीणासु स्याद्यथायथम् ॥ १५ ॥

यदेकतन्त्र्यामुद्दिष्टं नकुलादिषु तत् स्मृतम् ।
वेणुप्रवीणावीणास्थं वेणुष्वपि तदिष्यते ॥ १६ ॥

आहुरेके मानतालयुक्तं द्वाभ्यां विवर्जितम् ।
वीणावाद्यं कश्चिदाह मानेनैतद्विना कृतम् ॥ १७ ॥

लीलाकृतध्रुवातालयुगं स्यात् स्वेच्छया कृतम् ।
अस्य लक्ष्यप्रधानत्वाद्व्याख्या लक्ष्यानुसारिणी ॥ १८ ॥

कर्तव्या लक्ष्यतत्त्वज्ञैर्लक्ष्ये लक्ष्मविरोधिनि ।
ग्रहादिनियमो दृष्टोऽनुरोधाच्छास्त्रगोचरः ॥ १९ ॥

लक्ष्येऽन्यस्वरसन्दर्भो नान्यथात्वमिहार्हति ।
स्वस्थानानां चतुष्केण स्वरैः स्वस्थानसंभवैः ॥ २० ॥

वेणावपि तु वीणावद्रागोत्पत्तिरिहोदिता ।
लक्षणेन विरुध्येत यत्र रागस्तु तत्र हि ॥ २१ ॥

प्रायः प्रयोगमुपयान्ति भुजाः समस्ता
नान्यत्र ते च कविते सुतरां प्रशस्ताः ॥ ३५ ॥

ब्रह्मशैलैकदेशस्थो यो देशानखिलानपि ।
शास्ति तेन तथाभूता परिभाषात्र भाषिता ॥ ३६ ॥

यो मूर्ध्नि द्विषतां पदं प्रतिपदं धत्ते पदं स्वं गुणैः
स्फीतैरुन्नमयन् पदार्थमपि यत् स्वं वर्त्म नोल्लङ्घयेत् ।
तेनात्रैकपदे पदे धृतवता कामेन राज्ञा हृदा
शर्वाण्याः पदबन्धहेतुकपदोल्लासः पदे स्थापितः ॥ ३७ ॥

इति श्रीजगदीश्वरवनदेवनिजगणेन जगदम्बिकाकामाक्षीचरणकिङ्करेण श्रीकामेश्वरीगिरिविभुना अभ्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणाजनितकीर्तिपूरपराजिताचलनायकेन संगमतीरदुर्गोद्धरणोद्धृतसकलमण्डलाधीश्वरेण दमनपुरविध्वंसनवन्दीकृतयवनीनिचयेन महिषमेरुजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशाकंभरीपरितोषित शाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरिवारिताञ्जनादिगिरिविजयविख्यातवीर्यवर्गेण महदम्बमातृकापुरोन्मूलनधर्षितमहोरगपुरेण श्रीवनदेवस्वामिप्रसादरचनापरमेश्वरेण अम्बकेश्वरसन्निधिकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गतायथार्थीकरणरचितचारुपथेन श्रीकामाक्षीगिरिनवीननिर्मितिपराजितसुमेरुणा श्रीमहिषाचलोपरि श्रीहरिशरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्याक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराजाधिराजराजश्रीराजमानमृगाङ्कतामराजनन्दनेन महाराज्ञीश्रीसौभाग्यवतीजसमाम्बिकाहृदयानन्दनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यवंशावतंसमहाराज्ञी श्री कर्मवती श्री लघुमादेवीहृदयाधिनाथेन राजाधिराजश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे पदोल्लासे परिभाषापरीक्षणं चतुर्थं समाप्तम् ॥

# ३. छन्दउल्लासः

## १. अनुष्टुप्परीक्षणम्

छन्दानुवृत्तकारीणि यस्य छन्दांसि जाग्रति ।
तमच्छन्दकृतं वन्दे स्वच्छन्दं गिरिजापतिम् ॥ १ ॥

समासेन प्रबन्धानां मूलभूतानि कानिचित् ।
तत्प्रयोगोपयोगीनि छन्दांसि व्याहरामहे ॥ २ ॥

मयरतसजभनसंज्ञाः कथिता अष्टौ गणाः क्रमेणैते ।
विज्ञेया वर्णभावाः प्रस्तारे ते त्रिकाः सर्वे ॥ ३ ॥

सर्वगुरादिल उक्तो मध्यलघुः स्यात्तथान्त्यलघुगुरुकौ ।
मध्यगुरादिगुरन्यौ सर्वलघुः स्यात्तथैवान्यः ॥ ४ ॥

पृथ्व्यम्बुवह्निमरुदम्बरसूर्यचन्द्र-
नाकाधिदैवतयुता मगणादयोऽमी ।
श्रीवृद्धिमृत्युरुपदेशफलानवाप्ति-
रुत्कीर्तिसौख्यफलदा मुनिभिः प्रदिष्टाः ॥ ५ ॥

दतचपषा मात्राख्या द्वित्रिचतुःपञ्चषट्कलाः क्रमशः ।
द्वित्रिवेदशररसभेदास्तेषामिमे गदिताः ॥ ६ ॥

उक्तात्युक्ता च मध्या च प्रतिष्ठातिप्रतिष्ठिका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरित्यपि ॥ ७ ॥

त्रिष्टुप् च जगती चातिजगती शक्वरीति च ।
सैवातिपूर्वाष्ट्यत्यष्टी धृतिश्चातिधृतिस्तथा ॥ ८ ॥

कृतिश्च प्रकृतिश्चैवाकृतिर्विकृतिरेव च ।
संकृत्यभिकृती चैवोत्कृतिश्छन्दांसि नामतः ॥ ९ ॥

आरभ्यैकाक्षरात् पादात् षड्विंशत्यक्षरावधि ।
पादैः क्रमादिमानि स्युर्मात्रावृत्तमतः परम् ॥ १० ॥

एकमात्र ऋजुर्ह्रस्वो लघुर्ज्ञेयो गुरुः पुनः ।
नैको दीर्घो विसर्गान्तः सानुस्वारो द्विमात्रिकः ॥ ११ ॥

अङ्ध्रचादिसंयुते वर्णे व्यञ्जने चाग्रगे लघुः ।
पादान्ते वा लघोर्गत्वं वंशस्थादिषु नो पुनः ॥ १२ ॥

पादान्तेऽत्र युतः कार्यो लुप्तालुप्तविभक्तिके ।
आदिकाक्षरविच्छिन्ने पदान्ते च तथाविधे ॥ १३ ॥

नार्धे समाससन्धी स्तो यतिर्विच्छेदसंज्ञिका ।
ओविरपदेऽत्र विज्ञेया यतिः श्रुतिसुखा बुधैः ।
यतो मधुरता श्लाघ्या भारत्या भरतादिभिः ॥ १४ ॥

अविशेषे तुरीयांशश्छन्दसः पाद इष्यते ।
द्विपद्यादौ द्वितीयांशादिकः पादो यतः स्मृतः ॥ १५ ॥

उक्ता गः श्रीरत्युक्ता गौर्दृष्टा सा स्त्रीर्मो मध्यायाम् ।
नारी शम्भोः पातु त्वां सा कन्या मौ गौ प्रतिष्ठा स्यात् ॥ १६ ॥

यथा—

सेयं कन्या गौरी पायाच्छम्भोर्या शेते हृत्पद्मे ।
अत्युक्ताया रतिगणा भेदा मध्याभवास्तथा ॥ १७ ॥

कामस्य तु प्रतिष्ठाया भेदा बाणगता मताः ।
अत्युक्ताया लघुर्वा ये तेष्वादावधिको लघुः ॥ १८ ॥

समासमविभेदेन द्विधानुष्टुबिहोच्यते ।
चित्रपदा भभगा ग उक्ता विद्युन्माला मौ गौ ॥ १९ ॥

जरौ लगौ प्रमाणिका नाराचमत्र तलगाः ।
अनुष्टुब्रसना वाद्याद्वक्त्रं ये तुर्यतोऽभीष्टम् ॥ २० ॥



पथ्या वक्त्रं समुद्दिष्टं तुर्याज्जे युग्मपादयोः ।
तुर्या दो जे नतरमसैर्न विपुलादयः ।
प्रायस्तुर्यो गस्तास्वो जे युजि षड्भ्यो लघुः सदा ॥ २१ ॥

पञ्चवक्त्रप्रसादाप्तसाम्राज्येन महीभृता ।
कालसेनेन वृत्ताद्यमनुष्टुप् परिकीर्तितम् ॥ २२ ॥

इति श्री राजाधिराजमहीमहेन्द्र श्री कालसेनविरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे छन्दउल्लासे अनुष्टुप्परीक्षणं प्रथमं समाप्तम् ।

## २. वृत्तपरीक्षणम्

अज्ञातवृत्तं ब्रह्माद्यैः श्रुतवृत्तं महात्मनाम् ।
परिज्ञातजगद्वृत्तं सद्वृत्तं च भजे शिवम् ॥ १ ॥

अथ वृत्तं प्रकीर्त्यते—

तद्द्विधा वर्णमात्राभ्यां पद्यं चैव चतुष्पदी ।
समैः पादैः समं वृत्तं द्वाभ्यामर्धसमं स्मृतम् ।
उक्ताभ्यां विपरीतं यत् तद्वृत्तं विषमं मतम् ॥ २ ॥

९ अक्षराणि—

भद्रिका भवति रो नरौ ॥

१० अक्षराणि—

उक्ता मत्ता मभसगयुक्ता ॥

११ अक्षराणि—

१. स्यादिन्द्रवज्रा ततजा गुरू चेत् ॥
२. उपेन्द्रवज्रा जतजा गयुग्मम् ॥
३. रो नरौ लघु गुरू रथोद्धता ॥
४. स्वागता तु रनभा गुरुयुग्मम् ॥
५. वेदैश्छिन्ना शालिनी मात्तौ गौ ॥
६. दोधकमुक्तमिदं भभभा गौ ॥

१२ अक्षराणि—

१. ख्यातेन्द्रवंशा ततजै रसंयुतैः ॥
२. वदन्ति वंशस्थमिदं जतौ जरौ ॥
३. जरद्वयं वदन्ति पञ्चचामरम् ॥
४. द्रुतविलम्बितमत्र नभौ भरौ ॥
५. इह तोटकमम्बुधिसैः प्रथितम् ॥



६. गणैर्यैश्चतुर्भिर्भुजङ्गप्रयातम् ॥
७. संमता स्रग्विणी रैश्चतुर्भिर्युता ॥

१३ अक्षराणि—

त्रिच्छेदा मनजरगैः प्रहर्षिणीयम् ॥

१४ अक्षराणि—

ख्याता वसन्ततिलका तभजा जगौ गः ॥

१५ अक्षराणि—

वसुयतिरियमुक्ता मालिनी नौ मयौ यः ॥

१६ अक्षराणि—

भ्रौ ननना गुरुश्च वृषभुजगविलसितम् ॥

१७ अक्षराणि—

गुह्यास्यैर्विश्रान्तिर्यमनसभला गः शिखरिणी ॥

१८ अक्षराणि—

१. नसमतभरास्तुर्यैः षड्भिश्चेद्यतिर्हरिणीपदम् ॥
२. यतौ न्यौ यः सोऽत्र मुनिभिरियं चित्रलेखा गदिता ॥

१९ अक्षराणि—

आदित्यैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥

२० अक्षराणि—

अश्वैश्छिन्ना सुगीता मरभनयभलागाङ्कैः सुवदना ॥

२१ अक्षराणि—

विख्याता स्रग्धरेयं मरभनययया सप्तकाश्वैर्यतिश्चेत् ॥

२२ अक्षराणि—

पङ्क्तिर्यतौ भरौ नरनरा मगौ भवति मन्द्रकं सुखलितम् ॥

२३ अक्षराणि—

रो नरौ नरनरा लगाविह भवन्ति चेद्भवति चित्रकं तदा ॥

२४ अक्षराणि—

ननभनजननाश्च यगणसहिता मुनियतियुतललितेयम् ॥

२५ अक्षराणि—

पङ्क्त्याविह तो यो सनभा ननगुरुः किल वनहरिणशिशुनयना॥

२६ अक्षराणि—

अत्राष्टभी रुद्रैश्छिन्नं ममतननन्नरसलघुगा भुजङ्गविजृम्भितम् ॥

अथवा—

नजनसभा नननगणलगका इति वसति भवति सततगतिः ॥

अथ दण्डकाः ॥

शेषजात्यादिकं मुक्त्वा षड्विंशत्यक्षराधिकम् ।
यत्किंचिद्दृश्यते छन्दस्तत् सर्वं दण्डकं विदुः ।
तद्वयं रगणाः सप्त चण्डवृष्टिरुदाहृता ॥ ३ ॥

अथार्णार्णवव्याजजीमूतलीला-
करोद्दामशङ्खादयः स्युः प्रबन्धाः ।
परं चोत्तरेणोत्तरेणैककेन
प्रवृद्धाश्च ते रेण विद्वद्भिरूह्याः ॥ ४ ॥

एवं मालादिवृत्तानि भवन्त्यन्यान्यनेकशः ।
यथेष्टं रचितानेकशुभनामान्यनुक्रमात् ॥ ५ ॥

चरणो यावदेकोनसहस्राक्षरनिर्मितः ।
मालावृत्तानि तावत् स्युरित्यादिष्टं महीभृता ॥ ६ ॥

अथवा वर्णयुग्मस्वसहस्राक्षरनिर्मितः ।
पादो भवति तावत् स्युर्यथेष्टमिह दर्शनात् ॥ ७ ॥



तथाद्यादिभी रैः पदैर्नादूगुरोः स्युः
परं पन्नगाद्याः प्रबन्धाः परेऽपि ।
ते च दम्भोलिहेलावलीमालती-
केलिकङ्केलिलीलाविलासादयः ॥ ८ ॥

यथेष्टं रगणैः प्रोक्तो लघुपञ्चकतः परैः ।
चण्डकालोऽथ यैः सिंहविक्रान्तो लघुपञ्चकात् ॥ ९ ॥

लषट्काद्वत्रयाच्चापि यथेष्टं यगणैः परैः ।
मेघमालादण्डकोऽयं प्रबन्धः सम्मतः सताम् ॥ १० ॥

सिंहविक्रीडको नाम स्वेच्छया यैः प्रयोजितैः ।
निरन्तरं लघुगुरू यत्र सोऽनङ्गशेखरः ॥ ११ ॥

प्रयुज्यते गुरुलघू साशोकपुष्पमञ्जरी ।
यथेष्टं नगणाश्चान्ते गद्वयं कामबाणकः ॥ १२ ॥

यथेष्टा भगणा गौ च स्याद्भुजङ्गविलासकः ।
नद्वयात् स्वेच्छया पञ्चमात्रैरुत्कलिका मता ।
एकैकगणवृद्ध्या स्युरेवमेते ह्यनेकधा ॥ १३ ॥

श्रुतेन यस्य वृत्तेन पवित्रीक्रियते जगत् ।
तेन श्रीकालसेनेन वृत्तमत्रोपवर्णितम् ॥ १४ ॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे षोडशसाहस्र्यां पाठ्यरत्नकोशे छन्दउल्लासे वृत्तपरीक्षणं नाम द्वितीयं समाप्तम् ।

## ३. आर्यावलोकनम् ।

देवासुरैर्नमस्कार्या स्वकार्यापेक्षयैव या ।
योगिभिश्च हृदा धार्या तामार्यामहमाश्रये ।

प्रथमेऽर्धे जः षष्ठो न्लो वा गः सप्तमो न विषमे जः ।
अपरेऽर्धे लः षष्ठो लक्ष्मेदं नियतमार्यायाः ॥ २ ॥

पूर्वार्धे षष्ठे न्ले तल्ले पूर्वे यतिरिह मुनिगणगे ।
तस्मिन् षष्ठप्रान्ते यतिरुदिता मुनिभिरिह मुख्यैः ॥ ३ ॥

अपरार्धे पञ्चमके न्ले सति सोक्ता चतुर्थगणनिधने ।
श्रीकालसेननृपतिर्युक्तामिह वदति तामार्याम् ॥ ४ ॥

यस्यामर्धे द्वितीये भवति यतिश्च त्रयेऽत्र सा पथ्या ।
पूर्वार्धे मुखचपला चत्रययतिविरहिता सदाभिमता ॥ ५ ॥

जघनविपुला परार्धे चत्रययतिविरहिता गदिता ।
प्रोक्ता द्वयोर्द्वयोर्या यतिरहिता चत्रये महाविपुला ॥ ६ ॥

शेषा विस्तारभीत्या भेदा नोक्ता मया सुधिया ।
जगणविहीना विषमे चत्वारः पञ्च युजि चतुर्मात्राः ॥ ७ ॥

द्वौ षष्ठाविति चगणास्तद्योगात् प्रथमदलसंख्या ।
एवमपरार्धसंख्या षष्ठे स्याल्लघुनि चैकस्मिन् ॥ ८ ॥

आर्यासंस्योभयदलसंख्याघाताद्विनिर्दिष्टा ।
अन्योन्यं प्रथमदले ताडनयाष्टौ शतानि जायन्ते ॥ ९ ॥

अर्कसहस्राण्येवं चरमेऽर्धेऽन्योन्यताडनया ।
षट्साहस्रो गदिता चतुःशती चाप्युभयदलविकल्पाः ॥ १० ॥



अन्योऽन्यं ताडनया जायन्ते कोटयश्चाष्टौ ।
लक्षाणामेकोना विंशतिरिह विंशतिः सहस्राणाम् ॥ ११ ॥

आर्याभेदा उक्ताः षष्ठे ले त्वेक एकस्मिन् ।
आर्यैवेयं गाथा प्राकृतभाषापथे विनिर्दिष्टा ॥ १२ ॥

गीतिविशेषानधुना शिवजायासेवको ब्रूते ।
द्विर्यस्या आर्याया अभ्यासो जायते दले प्रथमे ॥ १३ ॥

सा तन्नाम्ना गीतिः स्यादुपगीतिर्यदा चरमे ।
दलयोरत्रोभयोः स्यादुद्गीतिः कृते विपर्यासे ।
तत्तन्नाम्ना सर्वा जायन्ते भेदतो ह्यमिताः ॥ १४ ॥

त्रिंशन्मात्रास्तु पूर्वार्धे विंशतिः सप्त चापरे ।
सप्तपञ्चाशदुभयोर्मात्रा ज्ञेयास्तु योगतः ॥ १५ ॥

त्रिंशतो येऽधिका वर्णा द्विगुणास्ते त्रयाधिकाः ।
लघवस्तत्र विज्ञेयाः शेषा नु गुरवो मताः ॥ १६ ॥

ऊनिता अथवा वर्णैर्मात्राः स्युर्गुरवोऽखिलाः ।
गुरुभिस्तूनिता वर्णा लघवः परिकीर्तिताः ॥ १७ ॥

वसन्तोत्सवबन्धः स्यान्नवभिः पञ्चमात्रकैः ।
द्विपद्यन्ते तथा गीतौ द्विभङ्गिः परिकीर्तिता ॥ १८ ॥

द्विपद्यादौ तथा गीतिरन्ते मध्येऽवलम्बकम् ।
स त्रिभङ्गिर्द्विपदिका तद्वद्दूयं च पदद्वयम् ॥ १९ ॥

लघुर्द्वौ च तथादौ लास्त्रयः कर्पूरपूर्विका ।
तिथिच्छेदेऽश्वचैर्नैऽन्त्ये द्विपदी विषमेऽपि जे ॥ २० ॥

इति वा यतिवैचित्र्यात् सप्त गाः स्युः परा अपि ।
लयोऽथ भ्रमरपदमुपपूर्वं तदेव हि ॥ २१ ॥

कुङ्कुमो गरुडपदं हरिणीपदमेव च।
कमलाकरं भ्रमररुतं भ्रमरकपिठका ॥ २२ ॥

कुङ्कुमतिलकावली कदलीपत्रमित्यपि।
एवमाद्यैस्त्रिभिर्द्वाभ्यां योगे स्याद्वस्तवनेकशः ॥ २३ ॥

चतुर्मात्रद्वयं पञ्चमात्रं स्यात् खञ्जनामकः।
षण्मात्रश्च चतुर्मात्रस्त्रिमात्रश्चोपखञ्जकम् ॥ २४ ॥

षण्मात्रौ द्वौ चतुर्मात्रौ खञ्जिकाथावलम्बकः।
एते त्रयः पृथग्भेदास्त्रिभङ्गिः स्यात् परैरपि ॥ २५ ॥

त्रिभिर्मनोहरैश्छन्दोभिः स्वेच्छाग्रथितैरपि।
वा द्वयं लघुकान्तौ द्वौ तगणौ च गणाद्वयम् ॥ २६ ॥

भगणः सदृशैः पादैश्चतुर्भिर्वस्तुकं भवेत्।
विषमे सप्त मात्राः स्युः समे यस्य त्रयोदश ॥ २७ ॥

स रासो विषमे पञ्चमात्रौ द्वौ च तथैकदा।
युग्मे च चत्रयं पञ्चपदीमात्रादिरीरिता ॥ २८ ॥

आसां तृतीयपादस्य प्रासे स्यात् पञ्चमेन तु।
अन्ते तु दोहके वस्तुर+वा परिकीर्तिता ॥ २९ ॥

आद्यन्तयोश्च षण्मात्रे चत्रये मध्यगे सति।
समे जो वस्तुवदना मोजेजोन्लौ विकल्पतः ॥ ३० ॥

स्याद्रासावलयं पूर्वं मो जश्च चषपौ ततः।
ष च तेभ्यः परे ते स्याद्वदनं चोपपूर्वकम् ॥ ३१ ॥

षचचाद्दो वदनकं यमिते ते डिलाः स्मृताः :
स्यादष्टपद्चतुष्पाच्च धवलं तं निरूप्यते ॥ ३२ ॥

श्रीयशसो गुणपूर्वं क्रमाद्दोजे तु चत्रयम्।
दशमे चौ श्रीधवलं तथाद्ये च तृतीयके ॥ ३३ ॥



तथाविधे तृतीये च तथा तुर्यं तु चत्रयम्।
पञ्चमे सप्तमे द्वौ चौ तश्चैकः समयोः पुनः ॥ ३४ ॥

चद्वयं दस्तथा चैकश्चत्रयं वा यशःपरम्।
धवलं तु षड्गौ त्वाद्ये चतुर्थेऽपि तु चद्वयम् ॥ ३५ ॥

द्वौ द्वितीये पञ्चमे तु दौ षष्ठे च तृतीयके।
षद्वयाच्चेऽथ पे कीर्तिधवलं चतुरङ्घ्रिके ॥ ३६ ॥

षश्चौ जे षच वा दस्तो वातः स्याद्गुणपूर्वकम्।
आद्ययोः षत्रयं चश्च प्रत्येकं त्वन्त्ययोस्तथा ॥ ३७ ॥

पश्च चाः सर्वपादेषु चाद्यो दोऽथ तु मङ्गलम्।
आदिस्थे वदनाद्ये तु तदाद्यं धवलादिकम् ॥ ३८ ॥

यदाह—

उत्साहहेलावदनाडिलाद्यैर्यद्गीयते मङ्गलवाचि किंचित्।
तद्रूपकाणामभिधानपूर्वं छन्दोविदो मङ्गलमाचरन्ति ॥ ३९ ॥

चत्रयं दो यदा पादे तदा फुल्लकं मतम्।
यत्र ध्रुवकसंज्ञेयं ध्रुवा त्रेधा मता सताम् ॥ ४० ॥

षट्पदी चतुष्पदी च द्विपदी चेति नामभिः।
सप्तादिसप्तदशान्तकलाः पादास्तु पूर्वयोः ॥ ४१ ॥

तत्र सप्तकले पादे चतौ पदौ गणौ मतौ।
अष्टाक्षरे पतौ षदौ नवाक्षरे षतौ पचौ ॥४२॥

चद्वयं दोऽथवा पौ च चरणे तु दशाक्षरे।
चपदाः पञ्चदा वापि रुद्रार्णे चरणे गणाः ॥४३॥

चपताः षचता वेति पादे द्वादशवर्णके।
त्रयोदशाक्षरे पादे पौ तश्च तषकाः स्मृताः ॥४४॥

चत्रयं दास्तु षश्चौ च चरणे तु चतुर्दशे।
चत्रयं तोऽथवा पानां त्रयं पञ्चदशाङ्घ्रिके ॥४५॥

षद्वयं चः षोडशाङ्घ्रौ दचतुष्कं तु चद्विकम् ।
पादे सप्तदशकले षश्चौ तश्च त्रयं तु षः ॥४६॥

एवंगुणैस्त्रिभिस्तुल्यैस्तुल्यातुर्यैरतुल्यकैः ।
पादत्रयं भवत्यर्धे षट्पदी सा प्रकीर्तिता ॥४७॥

अस्यामाद्यस्य पादस्य द्वितीयेन तथा पुनः ।
तृतीयस्य तु षष्ठेन तुर्यस्य पञ्चमेन तु ॥४८॥

अनुप्रासस्तु कर्तव्यश्चतुष्पद्यामथोच्यते ।
प्रथमस्य द्वितीयेन तृतीयस्येतरेण तु ॥४९॥

अनुप्रासस्तु कर्तव्यः प्रायेण द्विचतुर्थयोः ।
चतुष्पदीविशेषास्तु वस्तुकार्धसमादयः ॥५०॥

ओजेकलास्तु सप्ताद्याः षोडशान्ताः समे पुनः ।
प्रत्येकं सैकिकाः सप्तदशान्ताः परिकीर्तिताः ।
व्यामिश्रार्धसमासर्वसमासंकीर्णकाश्च ताः ॥५१॥

चम्पककुसुमसामुद्रकमल्हणकुसुमगविलासकेसररावणहस्तकसिंहविजृम्भितमकरन्दिकामधुकरविलसितपञ्चककुसुमावर्ताः ।

मणिरत्नप्रभाकुङ्कुमतिलकचम्पकशेखरक्रीडनबकुलामोदमन्मथतिलकमालाविलसितपुण्यामलकनवकुसुमितपल्लवाः ।

मलयमारुतमदनावासमाङ्गलिकाभिसारिकाकुसुमनिरन्तरमदमोदकचन्द्रोद्योतरत्नावलयः ।

भ्रूवकणकमुक्ताफलमालाकोकिलावलीमधुकरवृन्दकेतकीकुसुमनवविद्युन्मालात्रिवलीतरङ्गकाणि ।

अरविन्दकविभ्रमविलसितवदननवपुष्पन्धयकिन्नरमिथुनविलासविद्याधरविलसितलीलासारङ्गाः ।

कामिनीहासापदोहकप्रेमविलासकाञ्चनमालाजलधरविलसिताः ।



अभिनवमृगाङ्कलेखासहकारकुसुममञ्जरीकामिनीक्रीडनककामिनीकङ्कणहस्तकाः ।

मुखपालनतिलकवसन्तलेखामधुरालापिनीहस्ताः ।

सुखपङ्क्तिकुसुमलतागृहे ।

रत्नमाला च—

इति पञ्चपञ्चाशद्भेदाः ।

व्यत्यासे सुमनोरमापङ्कजकुञ्जरमदनातुरभ्रमरावलीपङ्कजश्रीकिङ्किणीकुङ्कुमलताशशिशेखरलीलालयाश्चन्द्रहासगोरोचनाकुसुमबाणमालतीकुसुमनागकेसरनवपञ्चकमालाविद्याधरकुब्जककुसुमकुसुमास्तरणाः ।

मधुकरीसंलापमुखवासःकुङ्कुमलेखाकुवलयदामकलहंससंध्यावलीकुञ्जरललिताकुसुमवल्यः ।

विद्युल्लतापञ्चाननललितामरकतमालाः ।

अभिनववसन्तश्रीमनोहरात्तिलिकाकिन्नरलीलाः ।

मकरध्वजहासकुसुमाकुलमधुकरभ्रमरविलासमदनविलासविद्याधरहासकुसुमायुधशेखराः ।

उपदोहकदोहकचन्द्रलेखिकासुतालिङ्गनकङ्केल्लिताभवनानि ।

कुसुमितकेतकीहस्तकुञ्जरविलसितराजहंसाशोकपल्लवच्छायाः ।

अनङ्गलतामन्मथविकसितहुल्लणकानि ।
कञ्जललेखाकिलिकिञ्चिते शशिबिम्बितं चेति ता बह्वाः ॥

शुद्धद्विपदिकापादेष्वष्टाः पञ्च च गान्तवाः ।
जौ स्तः षष्ठद्वितीयौ तु मात्राद्विपदिका ततः ॥ ५२ ॥

षष्ठेनैकेन गुरुणा पूर्णा शुद्धैव गान्धिकाः ।

षश्च द्वयं मानवी स्यात् पौ तौ लौ चन्द्रिका मता ।
षश्च त्रयं धृतिस्तारान्तगा पुष्पचतुष्टयम् ॥ ५३ ॥

इति द्विपदी ॥

आनन्त्यान्नात्र तन्यन्ते द्विपद्यादेर्भिदा मया ।
प्रबन्धविधिहेतुत्वात्काश्चिदेव हि वर्णिताः ॥ ५४ ॥

कलहंसो नभौ जयौ ।

षो गणद्विपदी नाम चतौ सा स्वरपूर्विका ।
उपगन्धर्वकं नाम षत्रयं चचतुष्टयम् ॥ ५५ ॥

दश्चार्कैर्वसुभिः श्रान्ते तत्संगीतयतौ पुनः ।
चतुर्दशभिरष्टाभिश्चरीषश्चसप्तकम् ॥ ५६ ॥

त्रिमात्रस्य यतिश्चात्र चतुर्दशभिरष्टभिः ।
चतुर्भिश्च गणैः प्रोक्ता पद्धडीरासकः पुनः ॥ ५७ ॥

मात्राभिरष्टादशभिर्नगणेन यतौ पुनः ।
चतुर्दशभिरेवायं मात्राभिः कथितो बुधैः ॥ ५८ ॥

केषांचिज्जातयः सर्वा रासकाः संमते मताः ।
चपञ्चकं लघुगुरू यदि वा रासको मतः ।
गोपालानां तथा क्रीडा रास इत्यभिधीयते ॥ ५९ ॥

विश्वे मे नव तिथयो गुणचन्द्रौ शरविधौ शिखीन्दू च ।
तिथयो विश्वे विषमे समे तु रत्यर्कविश्वमनुरवयः ॥ ६० ॥

गुणचन्द्रौ युगचन्द्रौ षोडशसंख्याकलाः क्रमशः ।
सारसभ्रमरो हंसः कुररश्चन्द्रलेखकश्चैव ।
कुञ्जरतिजकौ हंसक्रीडो ह्येतेषु निर्दिष्टाः ॥ ६१ ॥

लघुभिः पञ्चादिभिरिह यद्येषामद्वयोः शिखान्ते स्यात् ।
तं सूरयो मयूरं नाम शिखाद्विपथकं प्राहुः ॥ ६२ ॥



रतिरष्टदशभिः कामगणैस्त्रिपदी मता ।
एकादशभिराद्यौ तु मादौ द्विद्विगुणौ मतौ ॥ ६३ ॥

चतुर्गुणस्तृतीयस्तु चतुर्थस्त्रिगुणस्तदा ।
यास्यामोजे पञ्चदश कलाः षोडश ताः समे ॥ ६४ ॥
अर्धयोर्भिन्नयमकौ कीर्तिता सा चतुष्पदी ।
बाणान्ते चरणौ त्रित्रिगणौ यस्यास्त्रिषष्ठकौ ॥ ६५ ॥

चत्वारो द्विद्विगणा सा गणैः कामस्य षट्पदी ।
तृतीये पञ्चमे चाद्ये मात्राः पञ्चदशैव तु ।
तुर्ये द्वितीये रवयस्तद्वस्तु परिकीर्तितम् ॥ ६६ ॥
प्रबन्धस्योपयोगीनि छन्दांस्युक्तानि कानिचित् ।
छन्दःशास्त्रानुसारेणोहनीयानि पराण्यपि ॥ ६७ ॥

यस्यार्या धर्मकामार्थं चरितं पर्युपासते ।
तेनार्याकिङ्करेणेदं कृतमार्यावलोकनम् ॥ ६८ ॥

इति श्रीराजाधिराजकालसेनमहीमहेन्द्रेण विरचिते संगीतराजे पाठ्यरत्नकोशे छन्दउल्लासे आर्यावलोकनं नाम तृतीयं परीक्षणम् ॥

## ४ प्रस्तारपरिपाटी ।

येन प्रस्तारमाधातुं भूतानां भूतयोनिना ।
प्रसूतं परमाण्वादि नमस्तस्मै परात्मने ॥ १ ॥

समवृत्तस्य तु पादेऽर्धस्यार्धेऽखिले तु विषमस्य ।
ये वर्णाः स्युर्गुरवः प्रथमविकल्पे तु ते स्थाप्याः ॥ २ ॥

प्राग्रूपस्याद्याद्गोऽधो लः स्योदुपरि समं तु परम् ।
प्रस्तारे पूर्वविधिस्समयभेदकृदिह भवेत् प्राज्ञः ॥ ३ ॥

भूयः कुर्याद्विधिममुं यावत्सर्वलघुर्भवेत् ।
मात्रागणे तु प्राग्रूपमात्रापूर्तिं नयेत् सुधीः ॥ ४ ॥

चरणस्य व्यवस्थोक्ता नार्यादिषु पुरातनैः ।
नष्टाङ्के विषमे सैके गुरुः स्यादर्थिते पुनः ॥ ५ ॥

समे चार्धे तदर्धे च नष्टाङ्के लघवो मताः ।
प्रारभ्याद्याद्द्विगुणितानेकतोऽङ्कान् समालिखेत् ॥ ६ ॥

सैकेन युक्तैर्लघुकैरुद्दिष्टस्य मितिर्भवेत् ।
उद्दिष्टाङ्कसमाहारात् सैकात् संख्यापि लभ्यते ॥ ७ ॥

येन वर्णादिवृत्तानां विन्यासः प्रसृतो भुवि ।
तेन श्रीकालसेनेन प्रस्तारोऽयं प्रपञ्चितः ॥ ८ ॥

इति श्रीजगदीशवनदेवनिजगणेन जगदीश्वरीकामाक्षीचरणकिङ्करेण श्रीब्रह्माद्रिविभुना अभ्युष्टतमनरेश्वरेण भीष्मपुरजयानीतानेकराजकन्यारत्नेन श्रीपुरग्रहणसंवर्धितयशोभरेण वाटिकाचलग्रहणजनितकीर्तिपुरपराजिताचलनायकेन संगमनीरदुर्गीकृतसकलमण्डलाधीश्वरेण दमनपुरविध्वंसनवन्दीकृतयवनीनिचयेन महिषमेकजयाजेयविभवेन शाकम्भरीरमणपरिशीलनपरिप्राप्तशा-



कम्भरीपरितोषितशाकम्भरीप्रमुखशक्तित्रयेण अष्टादशगिरिशिखरपरिवरिताञ्जनगिरिविजयविख्यातवीर्यवर्गेण महदम्बमातृकापुरोद्धूलनधर्षितामहोरगपुरेण श्रीवनदेवदेवस्वामिप्रसादरचनापरपरमेश्वरेण अम्बकेश्वरसन्निधिकीर्तिस्तम्भोन्नतजयस्तम्भेन श्रीब्रह्मगिरिभौमस्वर्गयथार्थीकरणरचितचारुपथेन श्रीकामेश्वरीगिरिनवीननिर्मितिपराजितसुमेरुणा श्रीमहिषाचलोपरिश्रीहरिचरणरचिताचलदुर्गेण अभिनवभरताचार्येण वीणावादनप्रवीणेन यवनकुलाकालकालरात्रिरूपेण त्रिसन्ध्याक्षेत्रसमुद्रसंभवरोहिणीरमणेन परमभागवतेन महाराणाश्रीमृगाङ्कनामराजनन्दनेन महाराज्ञीसौभाग्यवतीजसमाम्बिकाहृदयनन्दनेन सकलसीमन्तिनीशिरोमणिनिकुम्भराजन्यावतंसमहाराज्ञीश्रीकर्मवतीलघुमावतीहृदयाधिनाथेन श्रीराजाधिराजश्रीकालसेनेन विरचिते संगीतराजे षोडशसाहस्र्यां संगीतमीमांसायां पाठ्यरत्नकोशे छन्दउल्लासे प्रस्तारपरिपाटी नाम चतुर्थं परीक्षणम् ।

॥ छन्दउल्लासस्तृतीयः समाप्तः ॥

# ४. अलंकारोल्लासः

## १. उद्देशपरीक्षणम्

क्रियते स्वस्वसिद्धान्तैस्तीर्थिकैर्यस्य लक्षणम् ।
वृषादिलक्षणं नौमि तमसत्सिद्धिलक्षणम् ॥ १ ॥

प्रमदा इव नो भान्ति प्रबन्धाः सुष्ठ्वलङ्कृताः ।
विलक्षणा अतस्तानि ब्रुवेऽलङ्कृतिभिः सह ॥ २ ॥

विभूषणं तथा शोभाभिमानोऽक्षरसंगतिः ।
प्रोत्साहनोदाहरणे निरुक्तं गुणकीर्तनम् ॥ ३ ॥

गुणानुवादोऽतिशयो हेतुसारूप्यसिद्धयः ।
पदोच्चयाक्रन्दमिथ्याध्यवसायप्रियाशिषः ॥ ४ ॥

प्राप्तिश्च पश्चात्तपनं संशयेच्छानुवर्तनम् ।
कार्यनिर्भासनाख्यानयाच्ञायुक्तानुनीतयः ॥ ५ ॥

दृष्टान्तप्रतिषिद्धौ च क्षमा श्रद्धा ततः परम् ।
मनोरथोपपत्ती च कपटं परिदेवनम् ॥ ६ ॥

षट्त्रिंशदुक्तान्येतानि लक्षणानि समासतः ।
उपमाद्यैरलङ्कारैः सम्मितानि च ते यथा ॥ ७ ॥

उपमा दीपकं चैव रूपकं यमकं तथा ।
चत्वारोऽमी समादिष्टा अलङ्कारा: पुरातनैः ॥ ८ ॥

लक्षिता लक्षणैरेभिर्नानावृत्तैर्विचित्रिताः ।
बुधैः प्रबन्धाः कर्तव्या नानालङ्कृत्यलङ्कृताः ॥ ९ ॥

अल्पमुद्दिश्यते येन दीयते बह्वहर्निशम् ।
तेन भूषितविज्ञेन राज्ञोद्दिष्टं विभूषणम् ॥ १० ॥

इति श्रीराजाधिराजश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे अलङ्कारोल्लासे उद्देशपरीक्षणं प्रथमं समाप्तम् ।

## २. लक्षणपरीक्षणम्

महाभूतादिकानर्थान् योऽञ्जसा सृजतीश्वरः ।
अलङ्कृतिनिमित्तं तं पदार्थानां नमाम्यहम् ॥ १ ॥

यथारसं येषु निरूपितेषु भवन्त्युपादेयगुणाः प्रबन्धाः ।
तदत्र शोभाजननार्थमेषां प्रवक्ष्महे भूषणलक्षणानि ॥ २ ॥

अलङ्कारैर्गुणैश्चैव भूषणैरिव यद्युतम् ।
रूपकं रसवद्भाति तद्भूषणमितीरितम् ॥ ३ ॥

यथा—

उच्चस्फाटिकहर्म्यभित्तिविसरत्सत्पद्मरागांशुभिः
सिन्दूरप्रकरैरिवातिविततैर्नित्यं वसन्तोत्सवे ।
चञ्चद्धेमघटावतंसविलसन्नानानिलिम्पालयै-
रिन्द्रस्येव पुरी विभाति सततं श्रीब्रह्मशैलालयः ॥ ४ ॥

इति विभूषणम् ॥ १ ॥

पूर्वसिद्धार्थवाक्येन प्रसिद्धार्थस्य साधनम् ।
यत्र श्लक्ष्णविचित्रार्था तां शोभां जगदुर्बुधाः ॥ ५ ॥

यथा—

श्रीकृष्णेन किरीटिनेव शतशो दन्दह्यमाने कुले
शाके कौरववत्सुयोधन इव त्वय्येकशेषं गते ।
त्वं रे मालवभूमिपाल कुरुषे नो चेन्मदीयं वच-
स्तन्मन्ये विधिना त्वमीप्सित इदं मन्त्र्यं च शाठ्यं रणे ॥ ६ ॥

इति शोभा ॥ २ ॥

सहेतुकैर्यो वचनैः प्रतिषिद्धोऽप्यनेकशः ।
न निवर्तेत यत्रासावभिमान इति स्मृतः ॥ ७ ॥

यथा—

येनानर्गलदुर्गवर्गजयिना नाजीगणान् वैरिणो
दुर्गाग्र्यो हि कुरङ्ग एष समरे भूपेन शौर्याहृतः ।
ध्वस्ते भीतमभूदलं शककुलं श्रीशुक्लपूर्वे पुरे
त्वं शेषोऽसि विमुञ्च गर्वमधुना स्वं जीवितं पालय ॥ ८ ॥

इत्यभिमानः ॥ ३ ॥

संश्लेषोऽर्थाक्षरगतो यत्र वैचित्र्याम्भवेत् ।
तामल्पाक्षरविन्यासां विदुरक्षरसंगतिम् ॥ ९ ॥

यथा—

या सुलभानसुरेशान्
सुरतरुतः परिजनेन तामस्मै ।
वितरति कालुजिभूपति-
रभिमततमिभिमुखीभूतः ॥ १० ॥

इत्यक्षरसंगतिः ॥ ४ ॥

यत्रास्त्यष्टगुणोपेतैः सोपमानैर्वचोभरैः ।
गूढार्थैर्नायकोत्साहयोगः प्रोत्साहनं तु तत् ॥ ११ ॥

यथा—

उद्दण्डः पटहध्वनिर्घनघनप्रध्वाननाभैरवी-
हेषातुङ्गतुरङ्गमाग्रखुरलीशब्दानुगः श्रूयते ।
दिग्दन्तावलदन्तभेदनपटुर्वीरालिसिंहध्वनि-
र्भिन्दन् शैलशिलोच्चयान् पुनरहो कस्मादकस्मादिव ॥ १२ ॥

इति प्रोत्साहनम् ॥ ५ ॥

श्रवणादेकशब्दस्य यत्र कार्यान्तराण्यपि ।
अनुक्तान्यपि सिध्यन्ति तदुदाहरणं स्मृतम् ॥ १३ ॥



यथा—

लेखित्वा नलकूबरं पृथुकुचप्रारम्भया रम्भया
वैदर्भी निषधाधिपेन च रतिं कामेन कृष्णां श्रिया ।
पश्यन्त्यो मुहुरन्वहं नृपसुताः श्रीकालसेनक्षमा-
नाथेन स्वमतुल्यरागविभवाः सादृश्यतोऽकल्पयन् ॥ १४ ॥

इत्युदाहरणम् ॥ ६ ॥

तथ्यातथ्यविभेदेन निरुक्तं द्विविधं स्मृतम् ।
सिद्धिप्रसाधितं पूर्वमपरं चाप्रसाधितम् ॥ १५ ॥

तथ्यं यथा—

चन्द्रः काश्मल्यमागात् कथमिति गदिते कश्चिदस्याशयज्ञो-
ऽवादीदस्योदयोऽयं त्रिभुवनधवलीकारकामस्य जाने ।
तच्छ्रीकृष्णस्य राज्ञः कृतमतिविधुभिः कीर्तिपूरैः कृतं मे
तथ्यापूरेण हृत्स्थो बहिरिति समभूत् कालिमा तथ्यमस्य ॥१६॥

अतथ्यं यथा—

सत्यं नासत्यमेतन्मुनिवचनमहाभ्यासयोगो वहेच्चेत्
कौशल्यं कर्मणां नो यदि कथमभजत् सोऽपि राजा द्विजानाम् ।
दृष्ट्वा श्रीकालसेनक्षितिपतियशसां राशिमुद्रिक्तशोभं
हित्वा स्वस्यौचितिं तां निशिचरचरणत्वोचितं कालिमानम् ॥१७॥

इति निरुक्तम् ॥ ७ ॥

बहूनां गुणिनां यत्र नानार्थजनितैर्गुणैः ।
एकोऽपदिश्यते तत्तु कीर्तितं गुणकीर्तनम् ॥ १८ ॥

यथा—

ये हतप्रतियोधशौर्यशमनप्रख्यानवीरव्रताः
प्रद्युम्नप्रतिरूपका वितरणप्रावीण्यकल्पद्रुमाः ।

तेऽमी दल्लिपुरे हठेन यवना नीताः क्षयं भूभुजा
धृष्टो यातु महम्मदो धुरसिमां कालन्दरीं मन्दधीः ॥ १९ ॥

इति गुणकीर्तनम् ॥ ८ ॥

उत्तमानां गुणैः स्पर्धाहीनानामुपमाकृते ।
गुणानुवादः स प्रोक्तः प्रबन्धे कृष्णभूभुजा ॥ २० ॥

यथा—

ऋते हिमाद्रिं सरितः सुराणां
न संभवः स्यादिति युक्तमेतत् ।
इत्यूह्यते शुभ्रितसर्वलोकं
विलोक्य कीर्तिं नृपतेरमुष्य ॥ २१ ॥

इति गुणानुवादः ॥ ९ ॥

सामान्यस्य जनस्यात्र बहूनां गुणकीर्तनैः ।
उत्तमार्थविशेषो यः स प्रोक्तोऽतिशयो बुधैः ॥ २२ ॥

यथा—

पूर्णेन्दुमेतन्मुखमब्जयोनि-
र्निर्माय पश्चात् समवाप दौःस्थ्यम् ।
तद्दर्शनात् संकुचदासनाब्ज-
मिलद्दलोत्पेषणखिन्नगात्रः ॥ २३ ॥

इत्यतिशयः ॥ १० ॥

बहूनां माषमाणानामनेकार्थविनिर्णयात् ।
सिद्धे समानवचने हेतुरत्रोपवर्णितः ॥ २४ ॥

यथा—

धिङ्मां शकाधममहं प्रथमोऽभवं य-
द्वैधव्यहेतुरतुलं यवनीकुलानाम् ।
क्षत्रोद्भवे शककुले निधनो निदानं
येनाभियुक्त इति गुर्जरनाथ ऊचे ॥ २५ ॥

इति हेतुः ॥ ११ ॥



परोक्षोऽपि हि वाच्योऽर्थो यस्माल्लक्षणसाम्यतः ।
उत्पद्यतेऽनुकरणात्तत्सारूप्यमिहोदितम् ॥ २६ ॥

यथा—

सम्मोचितो मातृपुरं किलैकः
स तादृशः स्थानपुरेऽपराधः ।
एतद्विचिन्त्यास्य लभेत धर्मं-
त्यादिष्टवान् गुर्जरपः स्वभृत्यान् ॥ २७ ॥

इति सारूप्यम् ॥ १२ ॥

बहूनां तु प्रधानानां तुल्यार्थवचनैरिह ।
एकार्थसाधनं वाक्यं सिद्धिर्बुद्धिमतोच्यते ॥ २८ ॥

यथा—

श्रीतामेन पुरार्जितं भगवतः शम्भोः समाराधने
यच्छ्रीराममुखैश्चितं नृपतिभिर्धर्मैकनिष्ठैः सदा ।
कामाक्षीचरणानुचिन्तनबलात् स्फीतीकृतं यत्पुन-
स्तत्पुण्यं नृपकालसेनवपुषा स्फारं समुज्जृम्भते ॥ २९ ॥

इति सिद्धिः ॥ १३ ॥

प्रशंसा क्रियते यत्र नानार्थप्रथनात्मिका ।
पदैर्बहुगुणैरेकवाचकैः स पदोच्चयः ॥ ३० ॥

यथा—

आसप्तलोकमुर्वी-
महिनिलयं व्याप्य संस्थिता नित्यम् ।
आभाति विश्वमूर्तं-
र्वैनमालेवास्य कीर्तिततिः ॥ ३१ ॥

इति पदोच्चयः ॥ १४ ॥

तीव्रार्थभाषणं यस्मात् परसादृश्ययुक्तिभिः ।
वस्तुस्वरूपोपन्यासे स आक्रन्दः स्मृतो बुधैः ॥ ३२ ॥

यथा—

इत्यूह्यते संयति योऽरिवर्गै-
रज्ञातघातेषु शकेष्वकस्मात् ।
नवावतारं व्यसनस्य कुर्वन्
सोऽप्येष कालच्छलकैटभारिः ॥ ३३ ॥

इति आक्रन्दः ॥ १५ ॥

एतस्मिन्नपि यत्रार्थे तुल्यस्यार्थस्य निर्णयः ।
स मिथ्याध्यवसायस्तु प्रबन्धादिषु लक्षणम् ॥ ३४ ॥

यथा—

एतन्मे शिशुभाषितं न च रुतं नो कुञ्जभूमिर्गृहं
नो भृङ्गावलिगुञ्जितं मयि रुषा नाथस्य मेऽद्य कृतम् ।
नो वल्यश्चलपाणयः सखिगणा इत्थं हते गुर्जरे
यद्भीतेर्वनमाश्रिता भ्रममगुर्म्लेच्छा गताः सर्वशः ॥ ३५ ॥

इति मिथ्याध्यवसायः ॥ १६ ॥

यत् पूर्वं क्रोधजननमन्ते हर्षप्रवर्धनम् ।
प्रियोक्तिर्गदिता सा स्यैराशीर्वादसमन्विता ॥ ३६ ॥

यथा—

जित्वानेकपुरा धृता भुजबलात् कामेश्वरी लीलया
नीत्वा स्वं नगरं रुषा प्रतिभटा ये खर्वगर्वोद्धताः ।
स्वं स्थानं पुनरापयंस्तदधिपा वृद्धत्वशेषीकृता
रामादप्यधिकं तवेति चरितं श्रीकालसेनप्रभो ॥ ३७ ॥

इति प्रियोक्तिः ॥ १७ ॥

वाक्यमाशंसनोपेतं मनोरथसमुद्भवम् ।
प्रार्थनीयपरान्या वा साशीः शिष्टैरिहोदिता ॥ ३८ ॥

यथा—

यमभ्यमित्रीयितुमुद्यतासि-
माशीर्भिरार्या इति वर्धयन्ति ।



यन्मङ्गलं वृत्रवधोद्यतस्य
वृत्रद्विषस्तद्भवतेऽद्य भूयात् ॥ ३९ ॥

इत्याशीः ॥ १८ ॥

दर्शनादेकदेशस्यानुमानं यस्य कस्यचित् ।
कार्यान्तरस्य सा प्राप्तिर्गदिता तामराजिना ॥ ४० ॥

यथा—

गुर्जरेशगजव्याज-
राज्यलक्ष्मीहठाहृतेः ।
अस्मिन् राजकराज्यश्री-
रेष्यतीत्यनुमीयते ॥ ४१ ॥

इति प्राप्तिः ॥ १९ ॥

कार्ये वाप्यथवाकार्ये सहसैवोपपादिते ।
चेतसो यस्तु संतापः स पश्चात्ताप उच्यते ॥ ४२ ॥

यथा—

एतत्सैन्यरथेभवाजिविदलद्भूकम्पतर्यागमा
मुक्त्वाकास्मिकजातसंभ्रमवशान्मार्गे कुरङ्गेक्षणाः ।
गत्वाद्रीनिति चिन्तयन्त्यरिगणा दुश्चेष्टितं चेष्टितं
हा कष्टं किमिदं मलेयुरपि ताः क्वास्ता क्व वा ताः पुनः ॥४३॥

इति पश्चात्तापः ॥ २० ॥

अज्ञाततत्त्वो वाक्यार्थः समाप्तिं यत्र नीयते ।
नानाविचारसंपन्नः संशयः स उदाहृतः ॥ ४४ ॥

यथा—

यमधिकृत्य परः परतोऽपि स-
ज्जलनिर्जनता वदनोदरात् ।
अयमितः स किलेति तव श्रुतें-
र्वदति कंस इहागत इत्यहो ॥ ४५ ॥

इति संशयः ॥ २१ ॥

स्नेहाद्दाक्षिण्यतो वापि यत्परस्यानुवर्तनम् ।
विनयादर्थसंयुक्तं सानुवृत्तिरिहोदिता ॥ ४६ ॥

कुर्वते सुहृदो यस्य
स्वप्राप्तं रक्षितुं तथा ।
अत्रायाहीति चाटूनि
विनीतवदुपस्थिताः ॥ ४७ ॥

इत्यर्थानुवृत्तिः ॥ २२ ॥

केनचिद्धेतुना यत्र दोषाणां गुणयोजनम् ।
गुणेषु दोषयुक्तिर्वा तत् कार्यं कार्यवेदनम् ॥ ४८ ॥

यथा—

युष्मच्छासनमद्य यावदपि मे मूर्ध्ना धृतं काङ्क्षया
लप्स्यामो भुवमित्यथो व्रज सखे यास्याम्यहं स्वेच्छया ।
अद्याहं सुभगा न चास्मि गृहिणी नो जीवितेशो भवान्
यस्येत्थं रिपुयोषितामनुवनं वाक्योत्करः श्रूयते ॥ ४९ ॥

इति कार्यम् ॥ २३ ॥

निर्भर्त्सनमनेकार्थसाधकं युक्तिमद्वचः ।

यथा—

सर्वेदं त्वां विजानन्ति सर्वदा सुहृदोऽरयः ॥ ५० ॥

इति निर्भर्त्सनम् ॥ २४ ॥

अपृष्टैरथवा पृष्टैराख्यानं निर्णयः स्मृतः ।

यथा—

मनोरथानामुपरि वर्ततेऽयं महीपतिः ।
पारेरजांसि वृत्तानि यस्येत्याख्यान्ति सूरयः ॥ ५१ ॥

इति निर्णयः ॥ २५ ॥

क्रोधमुत्पाद्य यद्वाक्यमन्ते हर्षं प्रयच्छति ।
पुनर्यत् प्रियतामेति सा याञ्चा परिकीर्तिता ॥ ५२ ॥



यथा—

क्रोधौद्धत्येन हत्वा निकृतिकरमिलाधीश्वराणां समूहं
दिष्ट्या तस्मिन्नुपेते शममुपरमता तत्स्वभावो रिपूणाम् ।
शेषाः सर्वे नमध्वं हतरिपुनिकरं कालसेनं महीन्द्रं
तत्पादप्राज्यसेवोदनतसुखजुषां स्वस्ति राज्ञां कुलेभ्यः ॥ ५३ ॥

इति याञ्चा ॥ २६ ॥

अन्योन्यस्यानुकूल्येन महद्भिः समवायतः ।
साध्यते योऽत्र संबन्धः सा युक्तिः परिकीर्तिता ॥ ५४ ॥

यथा—

अन्योन्यस्यानुकूल्येन
यस्येच्छन्त्यनुकूलनम् ।
वनदेवमुखालेखाः
केषामितरथा कथा ॥ ५५ ॥

इति युक्तिः ॥ २७ ॥

अनुनीतिर्वचः क्रोधमपराधं प्रमार्जयेत् ।

यथा—

कुपित परितोषयन्ति ते
पुर एवेति समेत्य सत्रयः ।
कुरु नाथ दयां तृणाङ्कुरे
किमुतेयं वरशोरुपक्रमः ॥ ५६ ॥

इत्यनुनयः ॥ २८ ॥

अन्यदृष्टान्ततोऽन्यस्य प्रतिज्ञार्थस्य यानुमा ॥ ५७ ॥

यथा—

निदानं नो दैवं न भवति पुनर्हेतुरपरो
निसर्गो यत्साक्षान्निवसति हि विद्वत्सु कमला ।

प्रमाणीकर्तुं तत् प्रभवतु विधाता पुनरिदं
धनं दायं दायं विघटयति कृष्णक्षितिपतिः ॥ ५८ ॥

इति दृष्टान्तः ॥ २९ ॥

प्रतिषेधः स विज्ञेयः कर्तव्यार्थनिवारणम् ।

यथा—

एतत्प्रतापयशसी सूर्याचन्द्रमसाविह ।
अलमाशूद्रपं प्राप्येत्याहतुः सस्मयस्मितम् ॥ ५९ ॥

इति प्रतिषेधः ॥ ३० ॥

अक्रोधः क्रोधजननैर्वाक्यैर्यः सा क्षमा मता ॥ ६० ॥

यथा—

समुद्रमपि यस्योच्चैरतिशेते सहिष्णुना ।
नासूयति तथाभूतशेषादीनपि कर्हिचित् ॥ ६१ ॥

इति क्षमा ॥ ३१ ॥

यत्राभिनयतो भावं जनितैर्वचनैरिह ।
पृच्छ्यतेऽन्योऽथवात्मा तु सा पृष्टयभिधीयते ॥ ६२ ॥

यथा—

यद्वैरिस्त्रैणमाह व्यसनवशमदं वन्यभूमावुपेहि
स्वान्तः स्वास्थ्यं किमेभिः प्रकृतकरमुखैर्दुर्भप्रार्थनैस्तैः ।
यैश्चित्ते रोपितैः स्यादियमतिविरतिस्त्वं दृशी सौख्यहर्त्री
तानद्यैव प्रियत्वादभिलषसि कथं त्वं पुनस्तद्वदस्व ॥ ६३ ॥

इति पृष्टा ॥ ३२ ॥

निजाकारस्य यद्वाक्यं सुश्लिष्टार्थप्रदर्शकम ।
अन्यापदेशवचनैः कथ्यते स मनोरथः ॥ ६४ ॥

यथा—

श्रुतिविश्रुतयद्गुणाः करा
अपि पारेतटिनीपतिं स्थिताः ।



स्मरसारथिभिर्मनोरथै-
र्नृपकन्या वृणुते यमीश्वरम् ॥ ६५ ॥

इति मनोरथः ॥ ३३ ॥

उपपत्तिस्तु दोषाणां प्राप्तानां शमनं पुनः ।

यथा—

स्वप्नलब्धमपि यं नृपकन्याः
काङ्क्षितं नु सुचिरादनुनेतुम् ।
मुञ्च मानमनिदानमिदानीं
देहि दर्शनमिदं निगदन्ति ॥ ६६ ॥

इति उपपत्तिः ॥ ३४ ॥

कपटं छलयोगेनाभिसंधानकरं वचः ।

यथा—

यथा वेषचलादाने चाटूनि यवनेशितुः ॥ ६७ ॥

इति कपटम् ॥ ३५ ॥

अपराधैर्व्यलीकोत्थैः प्रसिद्धैर्यत्प्रयोजयेत् ।
अर्थान्तरेण संबन्धं ज्ञेयं तत् परिदेवनम् ॥ ६८ ॥

यथा—

बलादेतेनेशाः समरभुवि संत्याजितभुवा
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
अहो किं कुर्वेऽद्य त्यजति सहसा मां सहचरी
विमुक्तस्नेहोत्थं विचरति वचो यद्रिपुकुले ॥ ६९ ॥

इति परिदेवनम् ॥ ३६ ॥

रसानामानुकूल्येन येषु न्यस्तेषु रूपकम् ।
भातितानि समासेषु लक्षणान्युदितानि हि ॥ ७० ॥

न्यस्य लक्षणसंघातं यस्मिन् मेने कृतार्थताम् ।
समुद्रः स्वस्य तेनायं कृतो लक्षणसंग्रहः ॥ ७१ ॥

इति राजाधिराजश्रीकालसेनविरचिते संगीतराजे पाठ्यरत्नकोशे अलङ्कारोल्लासे लक्षणपरीक्षणं द्वितीयं समाप्तम् ।

## ३. शब्दालङ्कारः ।

विचार्यमाणस्तत्त्वेनोपमैवाखिलवस्तुनः ।
दीपको रूपकमिति श्रये तं शशिभूषणम् ॥ १ ॥

अर्थं प्रबन्धस्य शरीरमाहु-
र्योक्ता पदानां घटना ततोऽस्य ।
अलङ्कृतिस्तेन वदे पुरोऽह-
मलङ्कृतीरर्थगतास्ततोऽन्याः ॥ २ ॥

उपमेयस्य यत्र स्यादुपमानसमानता ।
गुणाकृतिसमायोगादुपमा नाम सा मता ॥ ३ ॥

धर्मवस्तुविपर्यासनियमानियमादिभिः ।
समुच्चयान्योन्यातिशयोत्प्रेक्षिताद्भुतसंशयैः ॥ ४ ॥

मोहनिर्णयनिन्दाचिकित्साश्लेषप्रशंसनैः ।
विरोधप्रतिषेधासंभाविताभूतहेतुभिः ॥ ५ ॥

चाटुतत्त्वाख्यानमालाविक्रियाप्रतिवस्तुभिः ।
प्रतिवस्त्वसाधारणवाक्याद्यैः स्यादनेकधा ॥ ६ ॥

प्रत्ययान्ययतुल्यार्थसमासाद्यैश्च हेतुभिः ।
एकस्यैकानेककाभ्यामनेकस्यैककेन च ॥ ७ ॥

बहूनां बहुभिः सा स्यात्तद्विकल्पास्त्वनेकशः ।
न ते कार्त्स्न्येन शक्यन्ते भेदा वक्तुं कथंचन ॥ ८ ॥

न ते मयोदाह्रियन्ते विस्तरत्रस्तचेतसा ।
लक्ष्ममात्रं मया तेषामुक्तं विस्तारभीरुणा ॥ ९ ॥

नानाधिकरणार्थानां शब्दानामेकवाक्यतः ।
संयोगात् कथनं प्राहुर्दीपकं तद्विदो जनाः ॥ १० ॥



किंचित्साधर्म्यसंपत्तेस्तुल्यावयवलक्षणम् ।
स्वैर्विकल्पैर्विरचितं रूपं रूपकमिष्यते ॥ ११ ॥

समस्तमसमस्तं च खण्डं चाखण्डमेव च ।
चतुर्धा तत् समाख्यातं जनस्थानावनीभुजा ॥ १२ ॥

वर्णावृत्तिः पदावृत्तिरुभयावृत्तिरित्यपि ।
विकल्पादादिमध्यानां यमकं भिन्नवाच्यगा ॥ १३ ॥

पादान्तयमकं चैव काञ्चीयमकमेव च ।
समुद्गयमकं चैव विक्रान्तयमकं तथा ॥ १४ ॥

यमकं चक्रवालं च सन्दष्टयमकं तथा ।
पादादियमकं चैवमाम्रेडितमथापि च ॥ १५ ॥

चतुर्व्यवसितं चैव मालायमकमेव च ।
एतद्दशविधं ज्ञेयं यमकं लक्षणाश्रयम् ॥ १६ ॥

वर्णसाम्यमनुप्रासः स्फुरद्गुणगणाश्रितः ।
तत्पदातत्परत्वेन रच्यते रचितो बुधैः ॥ १७ ॥

अलङ्कृतमलङ्कारैरेभिर्लक्षणलक्षितम् ।
रसानुरूपं कर्तव्यं रूपकं रूपकार्थिभिः ॥ १८ ॥

आसंसारं पूर्वराजचरितानुगवेषणात् ।
उपमानीतवृत्तेनोपमाद्या अत्र वर्णिताः ॥ १९ ॥

इति श्रीराजाधिराजमहाराजश्रीकालसेनविरचिते सङ्गीतराजे षोडशसाहस्र्यां सङ्गीतमीमांसायां पाठ्यरत्नकोशे अलङ्कारोल्लासे शब्दालङ्कारपरीक्षणं तृतीयं समाप्तम् ।

